आचारादिगुणाधारो रागद्वेषविवर्जितः । पक्षपातोज्झितः शातः साधुवर्गाग्रणीर्गणी ॥ ८ ॥
अशेषशास्त्रविच्चक्षुः प्रव्यक्तं लौकिकस्थितिः । गभीरो मृदुभाषी च स सूरिः परिकीर्तितः ॥ ९ ॥
कुलीनो जातिसपन्नः कुत्साहीनः सुदेशजः । कल्याणागो रुजाहीनः प्रसन्नः सकलेंद्रियः ॥ १० ॥
शुभलक्षणसपन्नः सौम्यरूपः सुदर्शनः । विप्रो वा क्षत्रियो वैश्यो विकर्मकरणोज्झितः ॥ ११ ॥
ब्रह्मचारी गृहस्थो वा सम्यग्दृष्टिर्जितेंद्रियः । निःकषायः प्रशातात्मा वेश्यादिव्यसनोज्झितः ॥ १२ ॥
उपासकव्रताचार्यो दृष्टसृष्टक्रियोऽसकृत् । श्रद्धालुर्भक्तिसंपन्नः कृतज्ञो विनयान्वितः ॥ १३ ॥
व्रतशीलतपोदानजिनपूजासमुद्यतः । जिनवदनकर्मादिष्वनुष्ठानपरः शुचिः ॥ १४ ॥
श्रावकाध्ययने दक्षः प्रतिष्ठाविधिवित्सुधी । महापुराणशास्त्रज्ञो वास्तुविद्याविशारदः ॥ १५ ॥
एवगुणो महासत्त्वः प्रतिष्ठाचार्य इष्यते । नैव पाखडिपुत्रो वा देवद्रव्योपजीविकः ॥ १६ ॥
नचार्थार्थी न च द्वेषी भ्रष्टलिंगी कलकवान् ॥ १६ ॥
न निकृष्टक्रियावृत्तिर्नातिवृद्धो न बालकः । नाधिकागो न हीनागो नातिदीर्घो न वामनः ॥ १७ ॥
उन्मत्तो ग्रहग्रस्तो वा भोजने पक्तिवर्जितः । गीतवाद्योपजीवी नो भाडो वैतालिको नटः ॥ १८ ॥
ज्ञाता उपासकाद्यंते न व्रयो न महाव्रती । गर्भाधानादिसस्कारैर्विहीनो नातिमोहवान् ॥ १९ ॥
शास्त्रज्ञः कुलजातोपि वर्जनीयस्तथाविधः ॥ २० ॥
एव समासतः प्रोक्तं प्रतिष्ठाचार्यलक्षणम् । प्रतिष्ठालग्नसशुद्धिं भणिष्यामो यथागमम् ॥ २१ ॥

यदि मोहात्तथाभूतः प्रतिष्ठा कुरुते तदा। पुरं राष्ट्रं नरेंद्रश्च प्रजा सर्वा विनश्यति ॥ २२ ॥
न कर्ता फलमाप्नोति नापि कारयिता स्वकम् । अथोक्तलक्षणापेतो यदि पूजयते त्वमुम् ॥ २३ ॥
प्रशस्तलक्ष्मा यदि पूजयेत पुमान् । जिनेंद्रचद्रार्चितपादपकजम् ।
पुर च राष्ट्रं च नृपश्च वर्धते स्वय जनः कारयितानुषंगतः ॥ २४ ॥
अथोक्तलक्षणोपेतः प्रतिष्ठाचार्यसत्तमः । जलमंत्रव्रतस्नानं त्रिसंध्यं वंदना भजेत् ॥ २५ ॥

इति श्री वसुनंदिसैद्धांतविरचित-प्रतिष्ठासारसंग्रहे प्रथमः परिच्छेदः ।



१ यहातक ही लिखी पुस्तकोमें मिलता है इसलिये आवश्यक समझकर अतमें लगाया गया है ।

# श्रीप्रतिष्ठासारोद्धारकी विषयसूची।



| विषय. | पृ. सं |
|---|---|


| विषय. | पृ सं. |
|---|---|

पण्डितप्रवर श्रीआशाधर विरचित

# प्रतिष्ठासारोद्धार

( संक्षिप्त भाषाटीकासहित )

समाप्त ।